श्रीयोगकल्पद्रुम
ॐ गं गणपतये नमः ।
अथ श्रीयोगकल्पद्रुमप्रारम्भः ।
मङ्गलम् ।
(वंशस्थं वृत्तम्)
प्रणम्य योगीन्द्रहृदङ्घ्रिपङ्कजं
महेश्वरं शेषमुखानृषींस्तथा ।
ब्रवीमि योगागमसारमद्भुतं
सुसाधकाल्केशविबोधसिद्धये ॥ १॥

(बसन्ततिलका वृत्तम्)
हृद्भूभवो निगमबोधसुमूलको द्वि-
स्कन्धः षडुन्नतलतश्च यमादिपर्णः ।
ध्यानादिपुष्पललितश्च विमोक्षसस्यः
सर्वार्थदो जयति योगसुरद्रुमोयम् ॥ २॥

(इन्द्रवंशा वृत्तम्)
आवृत्त्यरागौ पुरुषाण्डजन्मनः
पक्षौ वदन्तीह समाधिवित्तमाः ।
योगाततताकाशसुखाधिरोहणं
नूनं तयोर्नान्यतरेण सिद्ध्यति ॥ ३॥

(द्रुतविलम्बितं वृत्तम्)
जनननाशजरोग्रवनेचरं
त्रिविधतापकुकण्टकसङ्कुलम् ।
उपरमेत तृषोग्रदवानलं
जगदरण्यमवेक्ष्य सुधीरधीः ॥ ४॥

(द्रुतविलम्बितं वृत्तम्)
समपहाय तु दोषदृशाखिलं
विजनदेशगतो गतसाध्वसः ।
समुपकल्प्य शुभासनमात्मनो
दृढमतिः क्रमशस्तु समभ्यसेत् ॥ ५॥

(इन्द्रवंशा वृत्तम्)
ज्ञानं वदन्तीह विमोक्षकारणं
तज्जायते नैव विलोलचेतसि ।
लौल्यं न योगेन विना प्रशाम्यति

तस्मात्तदर्थं हि यतेत साधकः ॥ ६॥

(वंशस्थ वृत्तम्)
हठो लयो मान्त्रिकराज संज्ञितौ
चतुर्विधं योगमबालिशाविदुः ।
त्रयोपि राजोपगता भवन्त्यत-
स्तदर्थमेवेह यतेत कोविदः ॥ ७॥

(वंशस्थं वृत्तम्)
जगुस्तदङ्गाष्टकमुत्तमाशया
यमादिसंज्ञं यमिवर्यसेवितम् ।
समासतस्तस्यफलं च लक्षणं
वदामि वृद्धर्षिमतानुरोधतः ॥ ८॥

(वंशस्थं वृत्तम्)
अहिंसनं सत्यमचौर्यमार्जवं
क्षमा धृतिश्शौचमुपस्थनिग्रहः ।
मिताशनं दीनजनानुकम्पनं
यमा दशैते मुनिवर्यसम्मताः ॥ ९॥

(वंशस्थं वृत्तम्)
जपस्तपो दानमथागमश्रुति-
स्तथास्तिकत्वं व्रतमीश्वरार्चनम् ।
यथाप्तितोषोमतिरप्यपत्रपा
बुधैर्दशैते नियमाः समीरिताः ॥ १०॥

(वंशस्थं वृत्तम्)
स्खलत्यसौ नैव यदा कथञ्चना-
चलाशयोऽहिंसनमुख्यशीलतः ।
तदा तु तज्जानि फलान्युपाश्नुते-
ऽविरोधमुख्यान्यचिरादुदारधीः ॥ ११॥

(इन्द्रवंशा वृत्तम्)
पीठान्यनल्पानि वदन्ति योगिन-
स्तेषां चतुष्कं तु तथोत्तमोत्तमम् ।
तत्रापि यत्स्थैर्यसुखावहं भवे-
तच्चैव योगेप्सुरिहाभ्यसेत्सदा ॥ १२॥

(द्रुतविलम्बितं वृत्तम्)
अनलसत्वमुपस्थबलक्षयो-
ऽनिलनिरोधपटुत्वमनूर्मिता ।
पवनमन्थरताप्युपजायते
स्थिरमतेरिहपीठजयात्किल ॥ १३॥

(वंशस्थं वृत्तम्)
ततोऽनिलायामचतुष्कमभ्यसे-
दहर्निशं रेचकमुख्यसंज्ञकम् ।
क्रियाभिराशुद्धतनुर्मितक्रियः
शनैश्शनैर्देशिकवाक्यचोदितः ॥ १४॥

(वंशस्थं वृत्तम्)
शिराविशुद्धिर्जठरानलोन्नति-
स्तथाक्षदोषापचयोंऽगलाघवम् ।
सुशक्तिबोधो मनसश्च योग्यता
विधारणा स्वस्य ततोभिजायते ॥ १५॥

(इन्द्रवंशा वृत्तम्)
भोगोन्मुखाक्षौघनिवर्त्तनं सदा-
ऽसंसर्गतो दोषदृशा च दीर्घया ।
संस्थापनं यच्च मनोनुरोधतो
योगस्य तत्पञ्चममङ्गमीरितम् ॥ १६॥

(वंशस्थं वृत्तम्)
सुरप्रसादो मनसः प्रसन्नता
तपःप्रवृद्धिस्त्वपि दैन्यसंक्षयः ।
द्रुतं प्रवेशश्च तथैव संयमे
जितेन्द्रियस्येह किलोपजायते ॥ १७॥

(वंशस्थं वृत्तम्)
हृदादिदेशेषु विकृष्य सर्वतो
विधारणं यन्मनसोऽस्थिरात्मनः ।
मुहुर्मुहुर्धैर्यमिहावलम्ब्य वै
सुधारणा सा विबुधैरुदीरिता ॥ १८॥

(इन्द्रवंशा वृत्तम्)
वृत्त्येकतानत्वमखण्डितं तु य-

तत्रान्यसङ्कल्पविकल्पजालकैः ।
तैलस्य धारेव समाधिगोपुरं
ध्यानं तदेवाहुरदीनचेतसः ॥ १९॥

(इन्द्रवंशा वृत्तम्)
ध्येयस्वरूपोपगतं यदा मनो
विस्मृत्य चात्मानमथावतिष्ठते ।
सङ्कल्पपूगापगतं तमन्तिमं
योगस्य सन्तोऽवयवं प्रचक्षते ॥ २०॥

(इन्द्रवंशा वृत्तम्)
एतत्त्रयं संयममाहुरुत्तमा
योगस्य मुख्यं करणं सुदुर्गमम् ।
सिद्ध्याऽस्य सिद्ध्योघमिहाश्नुतेञ्जसा
योगंविशत्यप्यचिरं महाशयः ॥ २१॥

(इन्द्रवंशा वृत्तम्)
वैराग्यमाश्रित्य परं तथेश्वरा
ध्यानेन विघ्नानखिलाञ्जयेद्यमी ।
संक्षिप्य चेतःपरमात्मसद्मनि
सञ्चिन्तयेदेकमथोत्तमाक्षरम् ॥ २२॥

(इन्द्रवंशा वृत्तम्)
संविश्य योगं परमं तु धीरधी-
रेकत्वमानीय तथात्मचेतसोः ।
प्रोत्सार्य सङ्कल्पविकल्पसञ्चयं
किञ्चित्स्मरेन्नैव ततस्त्वतन्द्रितः ॥ २३॥

(इन्द्रवंशा वृत्तम्)
इत्थं परानन्दपदार्पिताशयो
योगीविलूनाखिलकर्मबन्धनः ।
स्वैरश्चिरं संविचरत्युदारधी-
रत्रैव वाऽमुत्र विमुच्यतेऽथवा ॥ २४॥

(द्रुतविलम्बितं वृत्तम्)
परमयोगरहस्यमितीरितं
परमहंसजनेन समासतः ।
पठति यश्च समाचरतीह वै

पतति जातु स नोग्रभवार्णवे ॥ २५॥

इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितो
योगकल्पद्रुमः सम्पूर्णः ॥